तथा च 'बदरीनाथो' वैयाकरणकेसरी ।
बबुएसंज्ञको जातस्त्वपरस्ठीठराभिधः ॥
चतुर्ष्वेतेषु बदरीनाथस्य खलु ये सुताः ।
तानत्र निर्दिशामो यथावत्प्रथिता भुवि ॥
तत्र ज्येष्ठः सुधीः श्रीमान् दैवज्ञो राजसत्कृतः ।
लोकनाथाभिधो ज्ञेयः सत्कीर्त्तिलसितो हि यः ॥
तथा शाब्दिकमर्मज्ञः प्राज्ञो योगविदग्रगः ।
श्रीयोगनाथः प्रथितः काव्यतीर्थस्तथापरः ॥
श्रीचेतनाथो देव्यास्तु समाराधनतत्परः ।
ततो व्याकरणवित्काव्यतीर्थोपाधिविभूषितः ॥
श्रीश्यामसुन्दरो ज्ञेयो दयालुर्भक्त आत्मवान् ।
पारंपर्यक्रमेणैते ठक्कुरोपाधिसंयुताः ॥
श्रीकृष्णमोहनश्चाथ कमलाकान्तस्तथापरः ।
सर्वजिच्च तथा ज्ञेयो जगदीशादिसंज्ञकः ॥
एते श्रीलोकनाथस्य पुत्राः सन्ति महात्मनः ।
बरौनीसंज्ञके ग्रामे साम्प्रतं निवसन्ति हि ॥
माता मदीया लक्ष्म्याख्या यन्नाम्ना च मया कृता ।
साहित्यदर्पणाख्यस्य व्याख्या छात्रहितैषिणी ॥
मातुः परिचयं तावद्दीयतेऽत्र मया बुधाः ॥ ।
सत्कश्यपान्वये जातो गोविन्दो हि परोपकृत् ॥
दैवज्ञो लालजी ज्येष्ठस्ततः पञ्चमणिर्मतः ।
कनिष्ठश्च ततो जातो नाम्ना गृहमणिर्मणिः ॥
एतस्माज्जन्म मे मातुर्विज्ञेया इह भूतले ।
[illegible] ख्यातो हि बुद्धिमान् ॥
तत्पौत्र [illegible] इह कीर्त्तितः ।
तथा चैव रमा[illegible] [illegible]वित्सुधीः ॥
ज्ञेया 'चन्द्रकला' नाम्नी धर्मपत्नी मम [illegible]या ।
[illegible] का[illegible]सख्या संयोज्य समल[illegible] ॥
मद्ग्रन्थम[illegible] हि दोषा नूनं भविष्यन्ति तथापि मान्याः ॥
किं केतकीं कण्टकसंयुतामपि लोका न गृह्णन्ति वदन्तु सन्तः ॥